तदर्पकतयार्थवादः विध्येकवाक्यतामापद्यत इति ॥ ७ ॥

तुल्यं च साम्प्रदायिकम् ॥ ८ ॥

ननु अर्थवादवाक्यानि पूर्वोक्तयुक्त्या पौरुषेयाणि वेदेषु संपातायातानित्यत्राह। तुल्यं चेति। (साम्प्रदायिकं) गुरुपरम्परासम्प्रदायप्राप्तम् स्वाध्यायविधिपरिगृहीतत्वानध्यायपाठाभावादिरूपधर्मपालनादिकं (तुल्यं) विध्यर्थवादयोः तुल्यं। अतः न सम्पातायातम् । ८ ॥

अप्राप्ता चानुपपत्तिः प्रयोगे हि विरोधः स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येत ॥ ९ ॥

---

मिलकर रथपर बैठ ग्रामान्तर जाने का कार्य सिद्ध किया इसका नाम "नष्टाश्वदग्धरथन्याय" है ॥ ७ ॥

ननु, अर्थवादवाक्य पूर्व में कथन की गई युक्ति द्वारा पौरुषेय हैं ऐसा सिद्ध होता और वेदों में उनका पाठ किसी के प्रक्षेप करने से पाया जाता है इस पर कहते हैं। तुल्यंचेति। (साम्प्रदायिक) अनादि काल से विधिवाक्य तथा सिद्धार्थ बोधक के वाक्यों की गुरुपरम्परारूप संप्रदाय द्वारा प्राप्ति होना और स्वाध्याय विधि परिगृहीतत्व तथा अनध्याय में पठन पाठन का अभावादि रूप धर्म का पालनादिक (तुल्यं) विधि तथा अर्थवाद वाक्यों में समानता है कोई विशेषता नहीं। इसलिए प्रक्षेप से नहीं आए है ॥ ८ ॥

शास्त्रदृष्टिविरोधादित्यत्र शास्त्रविरोधस्य परिहारमाह। अप्राप्तेति। पूर्वोक्तशास्त्रविरोधो नानृतं वदेदित्यादिना सविरोधः (प्रयोगे) विधिकल्पनयाऽनृतवदनं कर्तव्यमिति तात्पर्ये सति स्यात्। नैवमस्ति विधिकल्पनाया अनभ्युपगमात्। शब्दार्थः अनृतावागिति अप्रयोगभूतः अप्रयोजकः विरोधे अतोऽस्मन्मते ऽनुपपत्तिः विरोधरूपा अप्राप्ता तस्मात् अनुपपत्यभावात् स्तुतिनिन्दादि तात्पर्यकः अनृत वादिनि वागित्यादि सर्वः शब्दः उपपद्यते ॥ ९ ॥

गुणवादस्तु ॥ १० ॥

---

"शास्त्रदृष्टिविरोधात्" इस दूसरे सूत्र में कथन किये हुए शास्त्र विरोध का परिहार करते हैं। अप्राप्तेति। नानृतंवदेत् इत्यादि वाक्य द्वारा जो पूर्व में शास्त्र विरोध कहा गया था वह विरोध (प्रयोगे) विधि की कल्पना करके झूठ बोलना चाहिये इस अर्थ में तात्पर्य के होने पर हो सकता है। परन्तु इस अर्थ में तात्पर्य नहीं, क्योंकि विधि की कल्पना का अनङ्गीकार है और अनृतावाक् है यह शब्दार्थ विरोधमें अप्रयोगभूत=अप्रयोजक है इस कारण हमारे मत में विरोध रुप अनुपपत्ति प्राप्त नहीं (तस्मात्) अनुपपत्ति का अभाव होने पर स्तुति तथा निन्दादि में तात्पर्यवाले "अनृतवादिनीवाक्" इत्यादि वाक्य विरोध रहित अर्थवाद सिद्ध होते हैं ॥ ९ ॥

ननु विधिनात्विति सूत्रे अर्थवादस्य विधेयस्तावकत्वमुक्तं तत्क्वचिद्व्यभिचरति यथा वेतसशाखया वकाभिश्च विकर्षतीति वेतसशाखावकयोर्विधिः "आपोवैशान्ताः" तै. सं. ५।४।४ इति अपांचस्तुतिः उदासीनायामिदम् कथमत्राह। गुणेति। गुणस्यविधेयकारणगतगुणस्य वादः कथनं वेतसशाखावकयोः कारणमापः तद्वृत्ति गुणकथनेकारणगुणाः कार्यगुणान् आरभंत इति न्यायेन कार्येऽपि तद्गुणसत्वं ज्ञायत इति तस्यापि स्तुतिरिति भावः ॥ १० ॥

---

ननु, "विधिनातु" इस सूत्र में अर्थवाद को विधेय का स्तावकत्व है ऐसा कथन किया गया है वह कहीं पर व्यभिचारी होता है अर्थात् उससे भिन्नार्थ की भी स्तुति करता है। जैसे "वेतसशाखया" तै. स. ५।४।४।३। इस वाक्य से अग्निनामक स्थण्डिल का विकर्षण में वेतसशाखा और अवका की विधि है "आपोवैशान्ता" तै० सं० ५।४।४।२ इस वाक्य से जलसमूह की स्तुति की गई है उदासीन अर्थ में स्तुति करने से इस वाक्य को प्रामाण्य कैसे होसकता है इसपर कहतेहैं। गुणेति। गुण=विधेय के कारणगुण का वाद=कथन है अर्थात् वेतसशाखा अवका का कारण जल है उस जल वृत्ति के गुण के कथन होने पर कारण गुण कार्य के गुणों को उत्पन्न करते हैं, इस न्याय से कार्य में भी उन गुणों की विद्यमानता ज्ञात होती है। इस प्रकार से उस वेतसशाखा तथा अवका की भी स्तुति है ॥ १० ॥

रूपात् प्रायात् ॥ ११ ॥

ननु परद्रव्यापहरणरूपस्तेया भावात् स्तेनेमनासि "स्तेनं मन" इति वाक्येन स्तेनाभेदप्रतिपादनं तथाऽनृत वदनैक स्वभावाभावात् वाचि "अनृतवादिनी वागिति" वाक्येनानृत वदनैकस्वभावत्व प्रतिपादनं बाधितार्थं गौरश्वइतिवत् मम पिता ब्रह्मचारी इतिवच्चात्राह। रूपादिति । रूपात् स्तेन वृत्तरूपाद्धर्मवत्वात् स्तेनेन चोरेण सहाभेदं प्रायात् प्राप। अयं भावः। चतुर्थपादे वक्ष्यमाणो यथाऽऽदित्यो यूप इति आदित्यवृत्तिरूपवत्त्वेन अभेदं प्राप तथा स्तेने यथा प्रच्छन्नसंचारस्तथा

---

ननु, परके=दूसरे के द्रव्य का अपहरणरूपस्तेय का अभाव होने से चोर से भिन्न मन है उसमें "स्तेनंमनः" इस वाक्य द्वारा चोर से अभेद का कथन तथा वाणी में केवल झूठ बोलने का अभाव होने से "अनृतवादिनीवाक्" इस वाक्य से वाणी में एक झूठ बोलने का स्वभाव है सत्य का नहीं यह कथन बाधितार्थ है, गौ से अभिन्न अश्व तथा मेरा पिता ब्रह्मचारी है इत्यादि वाक्यों के समान इसपर कहते हैं। रूपादिति। रूपात= स्तेनवृत्तरूप=स्तेनसंचरित रूप से=स्तेन के धर्मवाला होने से स्तेन अर्थात् चोर के साथ अभेद को प्राप्त होता है। यह भाव है कि चतुर्थपाद में आगे कहा जायगा जैसे "आदित्योयूपः" इस वाक्य में यूप आदित्यवृत्ति रूप से अभेद को प्राप्त होता है वैसा ही स्तेन में जैसे प्रच्छन्नसंचार है वैसा मन में होने

मनसि सत्त्वाद्भेदप्रयोग औपचारिक इति । प्रायाच्चानृतवादि-
नीवाक् ॥ ११ ॥

दूरभूयस्त्वात् ॥ १२ ॥

दृष्टिविरोधं परिहरति । दूरेति । दिवा दूरदेशस्थस्य धूम
एव दृश्यते न वह्निरिति न दृष्टेर्विरोधः । वह्नेर्दिवादर्शनमि-
सूत्रे पूरणीयम् ॥ १२ ॥

स्त्र्यपराधात् कर्तुश्च पुत्रदर्शनम् ॥ १३ ॥

प्रवरानुमंत्रणविधिसमीपे "न चैवं विद्मः ब्राह्मणा

---

से गुण योग से अभेद प्रयोग है और वाणी बहुधा अनृत
बोलने के स्वभाव वाली है ॥ ११ ॥

दृष्टि विरोध का समाधान करते हैं । दूरेति० । दिन में
अत्यन्त दूर देशस्थ अग्नि का धूम ही देखा जाता है अग्नि नहीं,
अतः प्रत्यक्ष विरोध नहीं । वह्नि का दिन में अदर्शन होता है,
इसको सूत्र में प्रवेश करना चाहिए । अधिक दूर होने से वह्नि
का दिन में अदर्शन होता है यह सूत्रार्थ है ॥ १२ ॥

प्रवर में मंत्र जप की विधि है । उसके समीप में "न
चवंविद्मः" गोप० ब्रा० १।२१ यह वाक्य पठित है । प्रत्यक्ष
द्वारा ब्राह्मणत्व का निश्चय होने पर संशय का कथन करना

वयमब्राह्मणा वेति श्रुतम्" गोप० ब्रा० ५।२१। प्रत्येक्षण निश्चिते ब्राह्मणत्वे संशयकथनं प्रत्यक्षविरुद्धमुक्तं परिहरति। स्त्र्यपराधादन्यजातीयपुरुषयोगेनापि कर्त्तुः पुत्रत्वमन्यजात्युत्पन्नपुत्रत्वं तस्य दर्शनं संभावनमस्ति अतः ब्राह्मणा अब्राह्मणा वेति विचिकित्सासंभवः। अयं अर्थवादः आर्षेयं वृणीतइति विधिशेषस्तावकः ॥ १३ ॥

आकालिकेप्सा ॥ १४ ॥

कोहि तद्वेद यद्यमुष्मिन् लोकेऽस्तिवान वेति दिक्ष्वतीकाशान्

---

प्रत्यक्ष विरुद्ध सूत्र २ में कहा गया था उसका परिहार करते हैं। ( स्त्र्यपराधात् ) माता के व्यभिचार का संभव होने से भिन्न जातीय पुरुष के द्वारा भी जनयिता को पुत्रत्व=अन्य जाति से उत्पन्न पुत्रत्व उसकी संभावना हो सकती है। इसलिए हम ब्राह्मण अथवा अब्राह्मण हैं सो नहीं जानते। यह संशय होना संभव हैं। नचैवंविद्मः यह अर्थवाद है "आर्षेयंवृणीते" इस विधि का अंग जो "देवाः पितरः" इत्यादि मन्त्र हैं उसका स्तावक है। अर्थात् अपनी ब्राह्मणी भार्या में ब्राह्मण से उत्पन्नत्व स्वरूप ही ब्राह्मण्य होता है वह ब्राह्मण्य इस मंत्र के जप द्वारा अब्राह्मण यजमान को भी उत्पन्न हो जाता है इस प्रकार मंत्र की स्तुति की जाती है ॥ १३ ॥

"कौन उसको जानता है जो परलोक में स्वर्ग है अथवा

करोतीति । तै० सं० ६।१।१।१ साकांक्षत्वादस्यविधेः शेषः ज्योतिष्टोमे प्राग्वंशशालायाः परिश्रयणं विहितं प्रथमं अमुष्मिन् लोके स्वर्गोऽस्तिनवा को वेद इदानीम् धूमस्य मुखादिषु प्रवेशे सद्यो मरणम् भविष्यतीति धूम निर्गमनार्थं चतुर्दिक्षु द्वाराणि करोतीति वाक्याभिप्रायः । तत्र ज्योतिष्टोमेन स्वर्गकाम इत्युक्त्वा स्वर्गोऽस्ति न वेति कथनं शास्त्रविरुद्धम् कथमुक्तमिति आक्षेपे उत्तरमाह । आकालिकेति । आकालिकस्य तत्कालोद्भवस्य सुखस्य दुःखनिवृत्तेर्वेप्साइच्छा सर्वानुभवसिद्धा।

---

नहीं" यह वाक्य "चारों तरफ से द्वार करे" इस विधि का शेष है क्योंकि साकांक्ष है । ज्योतिष्टोम में प्राचीन वंश नामक यज्ञ मंडप का प्रथम परिश्रयण=आवरणका विधान किया गया है। परलोक में स्वर्ग होता है अथवा नहीं कौन उसको जानता है। वर्त्तमान समय में धूम का मुखादि में प्रवेश होने पर शीघ्र ही मरण होगा इसलिए धूम निगमनार्थ चारों दिशाओं में द्वारों को करना चाहिए । यह वाक्य का अभिप्राय है । तहां "ज्योतिष्टोमेनस्वर्गकामः" ऐसा कहकर स्वर्ग है अथवा नहीं यह संशय कथनशास्त्र से विरुद्ध कैसे कहा गया है इस आक्षेप के होने पर उत्तर को कहते हैं । आकालिकेति । आकालिक अर्थात् वर्त्तमान काल में होने वाला सुख अथवा दुख की निवृत्ति उसकी इच्छा सर्वानुभव सिद्ध है । इस इच्छा को लेकर बहुत काल के पश्चात होने वाले स्वर्ग को निन्दा द्वारा द्वारनिर्माण की यह वाक्य स्तुति

तां गृहीत्वा कालान्तरभाविस्वर्गनिन्दया द्वारकरणमावश्यकमिति स्तौति चेदं वाक्यम् ॥ १४ ॥

विद्याप्रशंसा ॥ १५ ॥

शोभतेऽस्य मुखं य एवं वेदेति गर्गत्रिरात्रविधिस्तावक- मित्याह। विद्येति। गर्गत्रिरात्रवेदनस्येदं फलं किमुत तदनुष्ठान- इति विद्याया वेदनस्य प्रशंसा तद्द्वारा क्रतुस्तुतिः ॥ १५ ॥

सर्वत्वमाधिकारिकम् ॥ १६ ॥

पूर्णाहुत्या सर्वे कामा इति शेष वैयर्थ्यमित्यस्योत्तरं

---

करता है द्वार निर्माण का अदृष्ट स्वर्गफल अनिश्चित होने पर भी धूम परिहार प्रत्यक्ष फल होने के कारण निश्चित है। इसलिये द्वारकरण आवश्यक है ॥ १४ ॥

जो इसको जानता उसका मुख शोभित है ता० ब्रा० २०।१६।६ यह वाक्य गर्गत्रिरात्र ब्राह्मण (वेदभाग) विषयक विधान का स्तावक है ऐसा कहते हैं। विद्या इत्यादि से। गर्गत्रिरात्र ब्राह्मण का जानना भी मुख शोभा का कारण है उसका अनुष्ठान मुख शोभा के हेतु है यह बात कहने की आव- श्यकता क्या? इस प्रकार ज्ञान की स्तुति की गई है और उसके द्वारा कर्म की प्रशंसा होती है ॥ १५ ॥

एक कार्य के सर्वफल प्रदान करने पर दूसरे कर्म व्यर्थ हो

सर्वत्वमिति। श्रूयमाणं सर्वत्वमाधिकारिकम् औपचारिकं। यथा सर्वमन्नं शुद्धमित्यत्र सर्वपदं गेहस्थान्नमात्रपरं तथा सर्वपदं प्रकृतक्रतुसाध्यफलपरं यच्च क्रतुसाध्यंफलं तत्पूर्णाहुत्यनुष्ठानेन

जाते हैं यह प्रतिपादन करने के निमित्त जो पूर्णाहुति द्वारा सर्व कार्य (प्रार्थनीवस्तु) पाई जाती है यह उदाहरण प्रदर्शित हुआ है, उसके उत्तर में सूत्र कहते हैं। सर्वत्वमिति। सर्व काम पाये जाते हैं यह जो श्रूयमाण सर्व शब्द है यह आधिकारिक=औपचारिक अर्थात प्रस्तावित विषय को सम्पूर्णता बोधक है। जैसे सब अन्न शुद्ध है इस वाक्य में सर्व पद से घर में स्थित समस्त अन्न समझा जाता है जगत् का समस्त अन्न नहीं समझा जाता इसी प्रकार "पूर्णाहुत्यासर्वेकामः" इस वाक्य में सर्वपद प्रस्तुत याग से साध्य समस्त फल का बोधक है। यह भाव है कि पूर्णाहुति द्वारा कर्म का सांगत्व सम्पादित होता है इस कारण जिस कर्म में जो फल संभावित है वह समस्त फल हो उस पूर्णाहुति द्वारा पाया जायगा, उसके बिना नहीं प्राप्त होगा। इस प्रकार "पूर्णाहुति जुहोति" इस विधि का स्तावक है। एक कर्म की पूर्णाहुति उस कर्म के संपन्न करने के कारण उस कर्म का समस्त फल दे सकती है, दूसरे कर्मों का फल नहीं दे सकती है। पूर्णाहुति न देने से अग्न्याधान विफल हो जाता है वह विफलता पूर्णाहुति द्वारा निवारित होती है यह एक काम है। आधान समाप्त होने पर आहवनीयादि अग्नि समस्त अग्नि

विना न भवति इति पूर्णाहुति विधिस्तावक इति भावः ॥१६॥

फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः
फल विशेषः स्यात् ॥ १७ ॥

इदं समाधानं शेषवैयर्थ्यपरिहारक्षमं न भवत्यानर्थक्यादिति फलवादत्वमभ्युपगम्योक्तत्वादिति समाधानान्तरमाह। फलस्येति फलस्य स्वर्गादेः कर्मतः क्रियया निष्पत्तेः तेषाम् कर्मणां

---

होत्रादि कर्म में उपयुक्त होती है यह दूसरा एक काम है उस कर्म से वह वह फल पाया जाता है यह और एक काम है ॥१६॥

यह समाधान शेषवैयर्थ्य के परिहारमें समर्थ नहीं हो सकता क्योंकि पूर्णाहुति के फल को अंगीकार करके "आनर्थक्यात्" यह सूत्र कहा गया है। अतः अन्य समाधान कहते हैं। फलस्येति। स्वर्गादि फल की पूर्णाहुति तथा अग्निहोत्रादि गुरु लघु कर्म द्वारा स्वर्गादि फल की सिद्धि का श्रवण होने से उन कर्मों के परिमाणतः=अल्पत्व तथा भूयस्त्व के कारण फल में विशेष लघु तथा गुरु भाव लोक के समान होता है। लोक में अल्प क्रिया से अल्प भृति=अल्प पगार होता है और कर्म के गुरुत्व होने पर अधिक पगार होता है तथा पूर्णाहुति द्वारा अल्पकाल भोग्य स्वर्ग होता है और ज्योतिष्टोम से चिरभोग्य स्वर्ग होता है अतः शेष को वैयर्थ्य नहीं यह भाव है। कोई इस सूत्र की ऐसी व्याख्या करते हैं कि पूर्णाहुति अंग कर्म

परिमाणतः फले विशेषो लघुगुरुभावः स्यात् लोकवत्। लोकेऽल्प क्रिययाऽल्पभृतिः गुरुत्वे कर्मणः भृत्याधिक्यम् तथा पूर्णाहुत्या अल्पकालभोग्यः स्वर्गः ज्योतिष्टोमेन चिरभोग्य इति न शेष वैयर्थ्यमिति भावः ॥ १७ ॥

है उसका फल श्रुति अर्थवाद होवे किन्तु पशुबन्ध याजि सर्वाँल्लोकानभिजयति " पशुबन्ध याजि सर्वलोक जय करता है। इस स्थान में पशुबन्ध विहित मुख्य कर्म है सर्वलोक जय भी मुख्य फल है। इस कारण इसको अर्थवाद अर्थात् प्रशंसा मात्र नहीं कहा जा सकता इस कारण पशुबन्ध याग में समस्त फल पाने से अन्य कर्म वृथा होते हैं यह निवारण नहीं किया गया। इस आशंका के होने पर कहते हैं। फलस्येति। कर्म के द्वारा फल निष्पन्न होताहै किन्तु अन्य कर्म द्वारा उस फलका परिमाणाधिक्य संपादित होता है जैसे लोक में देखा जाता है। यही सूत्र का अर्थ है। पृथ्वी अन्तरिक्ष द्यूलोक इसके मध्य में अन्यतम लोकाऽभिजय रूप फल पशुबन्ध कर्म द्वारा निष्पन्न होता है उस पृथिव्यादि जयरूप फल का कर्मान्तर द्वारा परिमाणाधिक्य संपादित होता है लोक में जैसा देखा जाता है यह उसका दृष्टान्त है। जैसे एक मुद्रा द्वारा खारी ( परिमाण विशेष ) परिमित शस्य=कृषी मोल लेकर फिर अन्य मुद्रा द्वारा और भी कितने शस्य खरीदने पर पूर्वशस्य के परिमाणं की वृद्धि होती है, इसी प्रकार अन्य कर्म द्वारा पशुबन्ध कर्म के फल का परिमाणाधिक्य साधित होता है ॥ १७ ॥

अन्त्ययोर्यथोक्तम् ॥ १८ ॥

अन्त्ययोः अभागि प्रतिषेधादिति अनित्यसंयोगादिति सूत्रयोः समाधानम् यथोक्तं पूर्वोक्तं ज्ञेयं। स्वार्थे अप्रामाण्येऽपि "रुक्ममुपदधाति" इति विधेयस्तावकतया प्रावाहणिरित्यस्य-त्वेनवायुपरत्वं चोक्तमिति भावः ॥ १८ ॥

विधिवन्निगदाः। अधि. २।

विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥ १९ ॥

औदुम्बरो यूपो भवतीति तै० सं० २।१।१।६ अत्रौदुम्बरत्वमूर्ग्पशुरूपफलमुद्दिश्य विधीयतउतातिदेशप्राप्तयूपमुद्दिश्य विधीयते किंवा अर्थवाद इति संशये पूर्वपक्षमाह। विधिरिति।

---

पांचवें व छठवें सूत्रों में कथन किए गए अन्त के दोनों पूर्वपक्षों का समाधान "यथोक्तं" जैसा पूर्व ३।१।७ में कथन कर आए हैं वैसा ही जानना चाहिए। स्वार्थ में प्रामाण्य न होने पर भी "रुक्ममुपदधाति"=हिरण्य रखकर चयन करे, इस विधि के विधेय हिरण्य का स्तावक होने से और "प्रावाहणि" इसको वायु परक होने से समाधान कहा गया है यह भाव है ॥ १८ ॥

अब विधिवाक्य के समान अत्यन्त स्पष्ट अर्थ वाले सिद्धार्थ बोधक वेद वाक्य की प्रमाणता सिद्ध करने के लिए द्वितीय अधिकरण किया जाता है। औदुम्बर यूप करे यह पढ़ा

वा शब्द एवार्थे। फलमूर्जं पशूनाप्नोतीति अंशप्रतिपादितमुद्दिश्य उदुंबरत्वस्य विधिरेवस्यात् नार्थवादः अपूर्वत्वाद् गुणफलयोर्जन्यजनकभावस्याप्राप्तत्वात्। नन्वर्थवादोऽस्त्वत आह वादेति। वादमात्रमर्थवादमात्रं चेत् स्वार्थाप्रतिपादकतया अनर्थकं व्यर्थं यत्र सर्वथाऽगतिः तत्र लक्षणयास्तावकत्वं प्रकृते तथा नेति भावः ॥ १९ ॥

लोकवदिति चेत् ॥ २० ॥

है। इस वाक्य में औदुम्बरत्व बलवान पशुरूप फल को उद्देश करके विधान किया जाताहै अथवा "प्रकृति वद् विकृतिः कर्तव्या" इस वाक्य से प्राप्त यूप को उद्देश करके विधान किया जाता है किंवा अर्थवाद है इस संशय के होने पर पूर्वपक्ष को कहते हैं। विधिरिति। वा शब्द एव अर्थ में है "फलमूर्जं पशुनाप्नोति" तै० सं० २।१।१६ इस अंश मे प्रतिपादित उर्जं पशुओं को उद्देश करके उदुम्बरत्व का विधान ही है अर्थवाद नहीं। अपूर्व होने से=गुण=उदुम्बरत्वरूप गुण तथा फल=उर्कपशुरूप फल इन दोनों का किसी प्रमाण से जन्यजनक भाव की प्राप्ति न होने से। यदि कोई कहै कि अर्थवाद क्यों न माना जाय तो इसपर कहते हैं। वादेति। वादमात्रं=यदि अर्थवाद ही माना जाय तो अपने अर्थ का प्रतिपादक न होने से अनर्थक व्यर्थ अर्थात् अप्रमाण हो जावेगा। जिस स्थल में सर्वथा अगति है उस स्थल में स्तावकत्व माना जाता है प्रकृत में ऐसा नहीं है यह भावहै ॥१९

अस्मिन् पूर्वपक्षे सिद्धान्ती शङ्कते। लोकेति। अयं वादः लौकिकवादवदस्त्यतो न विधिरावश्यकः। यथा लोके गोविक्रयवेलायामियं गौस्संपन्नक्षीरा स्त्र्यपत्येति स्तुतिवाचकशब्दमपेक्षते त्वया क्रेतव्येति वाक्यं तथौदुम्बरो यूपो भवतीति स्तुतिवाचकशब्दमपेक्षते अतोऽर्थवादो न फलप्रतिपादकः ॥२०

न पूर्वत्वात् ॥ २१ ॥

दूषयति। नेति। नायंदृष्टान्तः संभवति सम्पन्नक्षीरादेः

---

इस पूर्वपक्ष में सिद्धान्ती शंका करता है। लोक इत्यादि ग्रंथसे। यह वाद लौकिकवाद की भांति है इसलिए विधि कल्पना करने की कोई आवश्यकता नहीं (चेत्) यदि (इति) ऐसा कहा जाय तो ठीक नहीं इसका आगे के सूत्र से संबंध है। जैसे लोक में गौ को मूल्य लेते समय यह गौ बहुत दूध देती है और बछड़ी वाली है इस स्तुतिवाचक शब्द की अपेक्षा "त्वयाक्रेतव्या" यह वाक्य करता है वैसाही "औदुम्बरोयूपोभवति" तै० सं० २।१।१६ यह वैदिक वाक्य भी स्तुतिवाचक शब्द की अपेक्षा करता है, इसलिए "फलमूर्जं" इत्यन्त वाक्य अर्थवाद फल विधायक नहीं ॥ २० ॥

अब सिद्धान्ती की शंका का पूर्वपक्षी खण्डन करता है। न इत्यादि सुत्रसे। लौकिक बहुक्षीरादि वाक्यका दृष्टान्त दिया गयाहै

प्रत्यक्षादिगम्यत्वाद् विधिरप्रयोजक इति स्तुतौ पर्य्यवस्यं
इहतूर्कपशुत्वादि साधनत्वं न तथाऽतः शक्त्या फलजनकत्व
बोधसंभवे लक्षणया स्तुतिकल्पनं न युक्तमिति भावः ॥ २१॥

उक्तं तु वाक्यशेषत्वम् ॥ २२ ॥

सिद्धान्तमाह । उक्तमिति । विधिनात्वेकवाक्यत्वादि

---

वह नहीं होसकता, क्योंकि बहुत क्षीरादि प्रत्यक्षादि प्रमाणों द्वा
ज्ञात हैं और ज्ञात की विधि नहीं होती इसलिए विधि अप्रयोज
होकर स्तुति में तात्पर्यवाली हो जाती है । वेदवाक्य में
बलवान् पशुत्वादि की साधनता प्रत्यक्षादि प्रमाणों द्वारा ज्ञा
नहीं इसलिए शक्ति से फलजनकताका बोध संभव होनेपर लक्ष
से स्तुतिकल्पना युक्त नहीं इसलिए उक्त वाक्य में विधि मान
आवश्यक है यह भाव है ॥ २१ ॥

अब पूर्वपक्ष का समाधान करते हैं । उक्तं इत्यादि सू
से । विधिनात्वेकवाक्यत्वाद् इस सूत्र में सिद्धार्थ बोधक वाक्य
को विधिवाक्य की अङ्गता उक्तं=कथन की गई है । अर्थवा
वाक्यों को विधेय अर्थ की स्तुति द्वारा विधिवाक्य के सा
एकवाक्यता कथन की गई है । इसी प्रकार विधिवाक्य की भां
प्रतीत होने वाले तथा निगद=अत्यंत स्पष्ट अर्थ वाले अर्थवा
वाक्यों को भी विधिवाक्य के साथ एकवाक्यता है । तथा च

सूत्रे वाक्यशेषत्वं विधिशेषत्वं । स्तुतिद्वारा विध्येकवाक्यत्वमुक्तं तथा च न निरर्थत्वमिति भावः ॥ २२ ॥

विधिश्चानर्थकः क्वचिदानर्थक्यं तस्मात् स्तुतिः प्रतीयेत
तत्सामान्यादितरेषु तथात्वम् ॥ २३ ॥

ननु शक्त्या विधिसंभवे लक्षणया स्तुतिकल्पनमन्याय्यमत आह । विधिरिति । क्वचिद्वाक्य विशेषे विधि विध्यर्थप्रवर्त्तनारूपः अनर्थकः संभवति यथा वायुर्वेक्षेपिष्ठा देवतेति वाक्ये वायौ क्षिप्रगामित्वविषयप्रवर्त्तनार्थः । वायुः क्षिप्रगामी कर्तव्य इति योज्यं तन्न संभवति वायोः क्षिप्रगामित्वस्य स्वभावसिद्धत्वेन

---

एकवाक्यता होने पर व्यर्थ हैं ऐसा नहीं कहा जा सकता इसलिए इनमें विधि की कल्पना नहीं हो सकती यह भाव है ॥ २२ ॥

शक्ति से विधि संभव होने पर लक्षणा द्वारा स्तुति कल्पना करना अयोग्य है इस शंका के होने पर कहते हैं । विधिरिति । ( क्वचित् ) वाक्य विशेष में ( विधिः ) प्रवर्त्तना रूप विधि का अर्थ अर्थवाला नहीं हो सकता । जैसे " वायुर्वैक्षेपिष्ठा देवता " इस वाक्य में वायुनिष्ठ क्षिप्रगामित्व है तद् विषयक प्रवर्त्तनार्थ व्यर्थ है । विधि की कल्पना करके वायु को शीघ्रगामी बनाना चाहिए ऐसी योजना होगी परन्तु वह संभव नहीं क्योंकि शीघ्र-गामिता को स्वभावसिद्ध होने के कारण पुरुषप्रयत्न से साध्य

पुरुषकृत्यसाध्यत्वादित्याह । आनर्थक्यमिति । आनर्थक्यं विधावानर्थक्यं स्यात् स्तुतिः वायव्यं श्वेतमालभेत भूतिकाम इति विहितयागाङ्गभूतवायुदेवतास्तुतिः तत्समीपवृत्तित्वेन तस्माद्वाक्यात्प्रतीयेत निर्णीयेत। तत्सामान्यात् विधिसमीपवृत्तित्वसामान्यात् साजात्यात् इतरेषु "औदुम्बरो यूपो भवति" "यजमानः प्रस्तर" इत्यादिषु तथात्वं स्तावकत्वं स्तुतिवादत्वं प्रत्येतव्यं नतु प्रस्तरकार्ये यजमानो योज्य इति विधिपरमिति भावः ॥ २३ ॥

प्रकरणे च संभवन्नपकर्षो न कल्पेत
विध्यानर्थक्यं हि तं प्रति ॥ २४ ॥

ननु यो विदग्धः स नैर्ऋत इत्यत्र यो निर्ऋतियागः

---

नहीं यह बात कहते हैं। आनर्थक्यमिति। विधि में यह वाक्य अनर्थक हो जाता है अतः (स्तुतिः) "वायव्यं श्वेतमालभेत भूतिकाम" इस वाक्यसे विहित याग का अंगस्वरूप वायु देवता की स्तुति उसके समीप रहने के कारण उस वाक्य से निश्चय होती है। तत्सामान्यात्=विधिवाक्य के समीप वृत्तित्वरूप साजात्य से भिन्नों में=औदुम्बरो यूपो भवति, यजमानः प्रस्तर न इत्यादि में तथा त्वं=स्तावकत्वं=स्तुति का कथन जानना चाहिए, प्रस्तर का कार्यमें यजमान को जोड़ना चाहिए इस विधि परक नहीं हो सकता यह भाव है ॥ २३ ॥

परन्तु जो पुरोडाश विशेषरूप से दग्ध काला हो जाय तो

वसुद्दिश्य विदग्धद्रव्यविधिसंभवे अर्थवादत्वकल्पनमन्याय्यमतआह। प्रकरणइति । प्रकरणे दर्शपूर्णमासप्रकरणे संभवन् निविशमानः लब्ध निवेशः सन् अर्थवादरूपेण तस्यापकर्षः प्रकरणवियोगो न कल्पेत । विधिकल्पनापक्षेतु प्रकरणवियोगः प्रसज्येत कुतः हि यतः तंप्रति दर्शपूर्णमासकर्मविशेषं प्रति विध्यानर्थक्यं, यो विदग्धः स नैर्ऋतः इति विधेरसंभवन्निवेशत्वम् । विधिपरत्वमुत्वा प्रकरण संबंध कल्पन पक्षो न संभवति अतो विधिकल्पानर्थक्यं दर्शपूर्णमासे निर्ऋतियागाभावादिति भावः ॥२४

---

वह निर्ऋति का भाग होता है तै० सं० २।६।३।४ इस वाक्यमें जो निर्ऋतियाग है उसको उद्देश करके विदग्ध द्रव्य का विधान संभव होनेपर अर्थवादकी कल्पना करना योग्य नहीं ऐसी शंकाके होने पर कहते हैं । प्रकरण इत्यादि सूत्र से । प्रकरणे=दर्शपूर्णमास याग के प्रकरण में संभवन्=अर्थवाद रूप से जिसका प्रवेश है उसका अपकर्ष=प्रकरण से वियोग=पृथक् नहीं करना चाहिए । विधि कल्पना पक्ष में तो प्रकरण से वियोग हो जायगा । क्यों हो जायगा इसका उत्तर हि तंप्रति=दर्शपूर्णमास याग विशेष के प्रति विध्यानर्थक्यं "योविदग्धः स नैर्ऋतः" इस विधि का निवेश होना असंभव है । वाक्य को विधायक मानकर प्रकरण के साथ संबन्ध कल्पना पक्ष संभव नहीं इस कारण विधिकल्पनापक्ष अनर्थक है क्योंकि दर्शपूर्णमास में निर्ऋति याग का अभाव है यह भाव है ॥ २४ ॥

विधौ वाक्यभेदः स्यात् ॥ २५ ॥

ननु तस्माद्यविदग्धता श्रपयितव्य तै.सं. २।६।३।४ "अतो यथा विदग्धो न भवेत् तथा पुरोडाशः पक्तव्यः" इति विधिस्तावकं सद् नैर्ऋतं चरुं परिवृक्त्यै गृहे "परिवृक्त्याः गृहे गत्वा नैर्ऋतं चरुं कुर्यात्" इत्यत्र हविषो दाहरूपगुण-विधायकमप्यास्तामत आह । विधाविति । उभयतात्पर्ये वाक्यभेदः वाक्यावृत्तिरूपः स्पष्टः ॥ २५ ॥

हेतुवन्निगदाः । अधि० ३ ।

हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥ २६ ॥

चातुर्मास्ये श्रुतम् । शूर्पेण जुहोति तेन ह्यन्नं क्रियतइति ।

---

इसलिए जैसे विदग्ध न हो वैसा पुरोडाश पकाना चाहिए इस विधि का स्तुतिवाद होकर परिवृक्ति के गृह में जाकर निर्ऋति देवता के चरु को करे । इस स्थल में हविः के दाहरूपगुण का विधायक भी हो इस पर कहते हैं । विधाविति । दोनों अर्थों में तात्पर्य होने पर वाक्यावृतिरूप वाक्यभेद स्पष्ट है । परिवृक्ति नाम प्रीति रहित राजा की स्त्री का है ॥ २५ ॥

अब हेतु पद वाले सिद्धार्थ बोधक वाक्य हैं उन्हों की प्रमाणता सिद्धि के लिए तृतीयाधिकरण की रचना करते हैं । शूर्पेण जुहोति तै० ब्रा० १।६।९ "तेनह्यन्नं क्रियते" यह वाक्य

अत्र तेन ह्यन्नमिति वाक्यस्य हेतुविधित्वे स्तावकत्वे वा प्रामाण्यमिति संशये पूर्वपक्षमाह । हेतुरिति । उक्त वाक्यम् हेतुः विधायकम् स्यात् । शूर्पेण होमः कुतः इत्याक्षेपे हि यतः तेनान्नं क्रियते अतः । इत्थं च यद्यदन्नसाधनं तद्धोम-साधनमिति सिद्धम् । तथा च दर्वीस्थाल्यादीनामपि होम-साधनत्व विधायकतया अर्थवत्त्वं फलवत्त्वं शूर्पपदस्यान्नसाधन-मात्रोपलक्षत्वेन उपपत्तिश्चेति ताभ्याम् हेतुभ्यां ॥ २६ ॥

स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य ॥ २७ ॥

चातुर्मास्य याग में श्रुत है । इस स्थल में तेनह्यन्नं यह वाक्य हेतु विधि में प्रमाण है अथवा स्तुतिवाद में प्रमाण हैं इस संशय में पूर्वपक्ष को कहते हैं । हेतुरिति० । उक्त वाक्य होम साधनता का हेतु अन्न करणता है इस अर्थ का विधायक है । शूर्प से होम क्यों किया जाता है इस शंका पर कहते हैं । हि=जिस कारण शूर्प से अन्न किया जाताहै इसी कारण शूर्पसे होम किया जाताहै । इत्थंच हेतुवादत्वेच =हेतुवाद के सिद्ध होनेपर जोजो अन्नसाधन है वे ही होम साधन हैं यह व्याप्ति सिद्ध हुई । तथा च=व्याप्ति सिद्धौ च=व्याप्ति के सिद्ध होने पर कर्छी वटलोई आदि को भी होम साधनत्व का विधायक होने से "तेन" इत्यादि वाक्य को अर्थवत्वं=फलवत्वं=प्रयोजनत्व है और शूर्पपद को अन्न के यावत साधनों का बोधक होने से उक्त उपपत्ति युक्ति भी है इसलिए इन हेतुओं से "तेनह्यन्नं क्रियते" यह वाक्य हेतु विधायक है ॥२६

सिद्धान्तमाह । स्तुतिरिति । शूर्पेण जुहोति इति विधिः तेनह्यन्नं क्रियते इति स्तुतिः । शूर्पस्तुतिः न तु हेतुवादः । शब्दपूर्वत्वात् शब्दः शूर्पेणेति करणत्वबोधक तृतीयान्तः पूर्वम् यस्य तेनह्यन्नं मित्यस्य तत्त्वात् तस्य दर्वीपिठरादरचोदना न विधिः । होमस्य साधनाकांक्षायां प्रत्यक्षश्रुतशूर्पेण निराकांक्षत्वात् स्तुतिपरमितिभावः ॥ २७ ॥

अयर्थे स्तुतिरन्यार्थ्येति चेत् ॥ २८ ॥

ननु प्रकृष्टान्नसाधनत्वं यथा स्थाल्यादौ तथा न शूर्पे

---

सिद्धान्त को कहते हैं । स्तुति इत्यादि ग्रंथ से "शूर्पेण जुहोति" इस वाक्य से शूर्प का विधान है । "तेनह्यन्नं क्रियते" इस वाक्य में स्तुति=शूर्पकी स्तुति=की जाती है, (शब्दपूर्वत्वात्) जिसके पूर्व शूर्पेण यह करणत्व बोधक तृतीयांत शब्द है ऐसा "तेनह्यन्नं" यह वाक्य है इसलिए "तेन" इस सर्व नाम से प्रकृत शूर्प का ही परामर्श हो सकता है अन्य का नहीं इसलिए "तस्य" कछीं बटलोई आदि की (अचोदना) यद्यदन्न करणं तेन तेन होतव्यं । जो जो अन्न के कारण हैं उनसे ही होम करना चाहिए इस विधि का अभाव है । साधनाकांक्षा होने पर प्रत्यक्ष श्रुत शूर्प के द्वारा निवृत्त हो जानेसे यह वाक्य स्तुति परक है, हेतु प्रतिपादक नहीं यह भाव है ॥ २७ ॥

प्रकृष्ट अन्न का साधनत्व जैसे स्थाली आदि में है वैसा शूप म नहीं इसलिए जिसमें जो धर्म नहीं और उस धर्म से

इति अविद्यमानधर्मेण स्तुरिन्याय्यत्याशङ्कते । व्यर्थे इति । व्यर्थे उक्तधर्मशून्ये शेषं स्पष्टम् ॥ २८ ॥

अर्थस्तु विधिशेषत्वाद्यथालोके ॥ २९ ॥

समाधत्ते । अर्थ इति । विधिशेषत्वाद् विधेयशूर्पस्तावकत्वाद् अर्थः सफलः । यथा लोके चैत्रो बलवत्तरः मैत्रादीन्सहतइत्युक्ते मैत्राद्बलवत्त्वेऽपि न सिंहाद्बलवान् तथा शूर्पस्य अन्नं प्रति स्थाल्यपेक्षयाबहिरङ्गत्वेऽपि लाङ्गलाद्यपेक्षयाऽन्तरङ्गत्वेन साधकत्वमस्तीति भावः ॥ २९ ॥

यदि च हेतुरवतिष्ठेत निर्देशात्सामान्यादिति

---

उसकी स्तुति अनुचित है ऐसी आशंका करते हैं । व्यर्थे इति । ( व्यर्थे ) उक्त प्रकृष्ट अन्न साधनत्वरुप धर्म से शून्य शूर्प में । शेष स्पष्ट है ॥ २८ ॥

अब सिद्धान्ती उक्त शंका का समाधान करता है । अर्थ इति । ( विशेषत्वाद् ) "तेनह्यन्नं" यह शब्द विधेय शूर्प की स्तुति करने वाला होने से ( अर्थः ) सफल है । जैसे लोक में बलवत्तर चैत्र मैत्रादिओं के उपर क्षमा करता है ऐसा कथन होने पर भी मैत्र से बलवान होने पर भी सिंह से बलवान नहीं पाया जाता वैसा ही शूर्प को अन्न के प्रतिस्थाल्यादि की अपेक्षा बहिरंग होने पर भी लाङ्गलादि की अपेक्षा अंतरंग होने से साधकत्वं है यह भाव है ॥ २९ ॥

चेदव्यवस्था विधीनां स्यात् ॥ ३० ॥

तुष्यतु दुर्जन इति न्यायेन हेतुविधित्वमंगीकृत्यापि न परसमीहितसिद्धिरित्याह । यदि हेतिवति यदि हेतुः हेतुविधिः तदाऽपि निर्देशात् शूर्पस्य निर्देशात् तन्निष्ठमन्नहेतुत्वमेव अवतिष्ठे प्राप्नुयाद् न तु दर्वीपिठरादितम् । पदश्रुत्यपेक्षया प्रत्ययश्रुतेः प्रबलत्वात् । आविशेष श्रुत्या तृतीया श्रवणात् । समाधत्ते । अव्यवस्थेति । विधिना तथा सत्यव्यवस्था स्यात् वस्तुमात्रे किंचिन्निरूपित हेतुतायाः सत्त्वादिति भावः ॥ ३० ॥

---

अत्र तुष्यतुदुर्जन • इस न्याय से "तेन ह्यन्न क्रियते" यह वाक्य हेतु विधायक ऐसा मानकर भी पूर्वपक्षी के इष्ट की सिद्धि नहीं हो सकती ऐसा कहते हैं । यदि हत्विति । ( यदि हेतुः ) यदि "तेन" इस वाक्य को हेतुविधायक माना जाय तो भी ( निदशात् ) "शूर्प का कथन होने से उसमें ही अन्न हेतुता प्राप्त हो सकती है दर्वी पिठरादि में नहीं । "शूर्पेण" इस पद श्रुति की अपेक्षा "इन" प्रत्यय श्रुति प्रबल है अतः अविशेष तृतीया के श्रवण से अन्नकरण सामान्य का ज्ञान होता है यह आशंका करते है ( सामान्याव ) अविशेष तृतीया विभक्ति का श्रवण होने से समाधान करते है । अव्यवस्थेति । ऐसा होने पर ( विधीनां ) विधेय और अविधेयों की कोई व्यवस्था नहीं

---

• पूर्वपक्षी का कथन मानकर दोष देने का नाम तुष्यतुदुर्जन न्याय है ।

मंत्राणामर्थप्रत्यायनार्थत्वम् । अधि० ४ ।

## तदर्थशास्त्रात् ॥ ३१ ॥

मंत्रोच्चारणमदृष्टार्थमुत कर्मसमवेतार्थस्मारकतया तदुपयोग इति संशये पूर्वपक्षमाह । तदिति । देवस्यत्वेत्यारभ्यगायत्रेणच्छन्दसाऽऽददे त्रैष्टुभेनाऽऽददे जागतेनत्वा छन्दसाऽऽददे पाङ्क्तेनच्छन्दसाऽऽदद इति मंत्राः सन्ति । तत्र लिंगेनैव आदानसिद्धौ चतुर्भिरभ्रिमादत्तइति आदानार्थकशास्त्रान्तरश्रवणं तथा इमामगृभ्णन् रशनामित्यत्रलिंङ्गेनैव आदानसिद्धौ इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्तइति श्रवणं व्यर्थं उरु-

---

रहती क्योंकि पदार्थमात्र में किसी निरूपित हेतुता रहती है यह भाव है ॥ ३० ॥

मंत्र अर्थ के बोधक होते हैं । मंत्रों का उच्चारण अदृष्टार्थ है अथवा कर्मसमवेत अर्थ का स्मरण कराने से उसका उपयोग है । इस संशय के होने पर पूर्वपक्ष को कहते हैं । तदिति । "देवस्य त्वा" इससे आरंभ करके "गायत्रेण" इत्यादि मंत्र हैं । तहां लिंग से ही=अर्थ प्रकाशन सामर्थ्य रूप लिंग से ही आदान की सिद्धि हो जाने पर "चतुर्भिरभ्रिमादत्ते" इस आदानार्थक शास्त्रान्तर का श्रवण तथा "इमाम" इस मंत्र में लिंग से ही ग्रहण के सिद्ध होने पर "इमाम" इत्यादि शास्त्र का श्रवण और "उरुप्रथस्व" इसमें लिंग से ही प्रथन के सिद्ध होने पर "उरूप्रथस्व" इत्यादि शास्त्र का श्रवण व्यर्थ हो

प्रथस्वेत्यत्र तदर्थः सः पुरोडाशप्रथमरूपोऽर्थः यादृशिशास्त्रे तादृशशास्त्राद् उरु प्रथस्वेति पुरोडाश प्रथयतीति विधिवाक्यात् तज्ज्ञानसंभवात् । मंत्रा- नर्थक्यमित्यत्र सर्वपञ्चम्यन्तानामन्वयः ॥ ३१ ॥

वाक्यनियमात् ॥ ३२ ॥

हेत्वन्तरमाह । वाक्येति वाक्यस्य वाक्यक्रमस्य नियमात् । अग्निर्मूर्धादिवः ककुदित्यत्र मूर्धादिवः अग्नि ककुदिति व्यत्क्रमपाठेऽपि अर्थप्रतिपत्तिसंभवात् क्रमनियमो व्यर्थः स्यादिति भावः ॥ ३२ ॥

बुद्धशास्त्रात् ॥ ३३ ॥

---

जायगा ( तदर्थः ) " सः "पुरोडाश का वृद्धि रूप अर्थ जिस शास्त्र में है उस शास्त्रसे—उरु प्रथस्वेति पुरोडाश प्रथयति—इस विधि वाक्य से प्रथन का ज्ञान संभव होने से मंत्रों को आनर्थक्य है इसमें सब पञ्चम्यन्तों का अन्वय है ॥ ३१ ॥

मंत्र अर्थ रहित होते हैं इसमें और हेतु देते है । वाक्येति । ( वाक्यस्य ) पदसमूहात्मक मंत्र वाक्य के पदक्रम का नियम रूप लिंग से भी मंत्रों को अर्थबोधकता नहीं । " अग्निर्मूर्धादिवः ककुत " इस मंत्र में मूर्धादिवः अग्नि ककुत इस व्युत्क्रम पाठ में भी अथ प्रतिपत्ति का संभव होने से क्रम का नियम अनर्थक हो जायगा यह भाव है ॥ ३२ ॥

हेत्वन्तरमाह । बुद्धेति । अग्निध्रेण प्रयोगाद् बहिरेव अग्निविहरणादि कर्म मदीयमिति बुद्धे जाते "अग्नीदग्नीन्विहर" तै० सं० ६।३।१।२ श० ब्रा० ४।२।५।११ बर्हिस्तृणीहि श० ब्रा० १।३ ६।७ इति शास्त्रात् पाठात् ज्ञातस्य ज्ञानं निष्प्रयोजनमिति भावः ॥ ३३ ॥

अविद्यमानवचनात् ॥ ३४ ॥

इतोऽपि मंत्रानर्थक्यमाह । अविद्येति । अविद्यमानवस्तुतः वचनात् कथनात् " चत्वारि शृंगा त्रयो अस्य पादाः ऋ. सं. ४।५।५८, ४।५८।३ इति प्रतिपादितंवस्तु प्रकृतौ वानास्तीति भावः ॥ ३४ ॥

---

और हेतु देते हैं । बुद्धेति । प्रयोग से=अनुष्ठान से बाहर ही अग्नि का प्रज्वालनादि कर्म मेरा है ऐसा अग्नीध्र को बुद्ध= ज्ञात होने पर " अग्नीत् ' बर्हि " इत्यादि शास्त्र से=संप्रैष का पाठ=कथन होने से मंत्र अर्थवाले नहीं । ज्ञात का ज्ञान निष्फल होता है यह भाव है ॥ ३३ ॥

आगे कहे जाने वाले हेतु से भी मंत्रों को आनर्थक्य कहते हैं । अविद्येति । अविद्यमान वस्तु का कथन पाये जाने से मंत्रों का कुछ अर्थ नहीं । " चत्वारि " इत्यादि वाक्य से प्रतिपादित चतुः शृंगत्वादि से उपेत वस्तु प्रकृति तथा विकृति में नहीं पाई जाती यह भाव है ॥ ३४ ॥

अचेतनार्थसंबन्धात् ॥ ३५ ॥

शृणोत ग्रावणः स्वधिते नैनं हिंसीरित्यचेतनसंबोधनादपीत्याह। अचेतनेति। अचेतनार्थे स्वधित्यादौ संबोधन विभक्ति प्रयोगात् ॥ ३५ ॥

अर्थविप्रतिषेधात् ॥ ३६ ॥

हेत्वन्तरमाह। अर्थेति। अर्थयोः मंत्रघटकपदार्थयोः विप्रतिषेधात् विरोधात्। "अदितिर्द्यौरदितिरन्तरिक्षम्" इत्यत्रादितिः चेतना तस्या अचेतनेन अंतरिक्षादिना सार्क

"शृणोत" तै० सं० १।३।१२ "स्वधिते" ६।३।९। "त्वमुत्तमास्योषधे" ऋ० ८।४।११।२३ इत्यादि वाक्यों में ग्रावणादि जड़ पदार्थों का संबोधन पाये जाने से भी ऐसा कहते हैं। अचेतनेति। अचेतन अर्थ स्वधिते इत्यादि में संबोधन विभक्ति का प्रयोग होने से मंत्र अर्थवाला नहीं ॥ ३५ ॥

अन्य हेतु देते हैं। अर्थेति। (अर्थयोः) मंत्रघटक दोनों पदार्थों का परस्पर (विप्रतिषेधात्) विरोध होने से। अदितिर्द्यौ ऋ० १।६।१६।१० वाज० सं० २५।२३ तै० आ० १।१३ एकोरुद्रो न द्वितीयोऽवतस्थे, असंख्याताः सहस्राणियेरुद्रा अधिभूम्याम्। वाज० सं० १६।५४ तै० सं० ४।५।११ इत्यादि वाक्यों में अदिति चेतन है उसका अचेतन अन्तरिक्षादि के साथ संबंध और एक ही रुद्र है, दूसरा नहीं, ऐसा कथन करके असंख्यात सहस्रों रुद्र पृथिवी में आधिपत्य करते हैं यह

संबंधो विरुध्यतइति भावः ॥ ३६ ॥

स्वाध्यायवदवचनात् ॥ ३७ ॥

यथा स्वाध्यायोऽध्येतव्य इत्यक्षरग्रहणविधि तथा अवचनादर्थस्मरणं मंत्रणकर्त्तव्यमिति विध्यभावात् ॥ ३७ ॥

अविज्ञेयात् ॥ ३८ ॥

अन्यं हेतुमाह । अविज्ञेयादिति । " सृण्येव जर्भरी तुर्फरीत्यादि मंत्राणामविज्ञेयार्थकपदघोटतत्वादिति भावः ॥३८

कथन विरुद्ध होता हैं इसलिए मंत्र उच्चारणार्थ हैं इनका कुछ अर्थ नहीं ॥ ३६ ॥

जैसा कि स्वाध्यायो अध्येतव्यः "श. ब्रा. ११।५।६ नित्य विधि वाक्य से द्विजातियों के अक्षर ग्रहण के लिये विधान है वैसा अर्थ ग्रहण के लिये वचन न होने से मंत्र अनर्थक है=अर्थ स्मरण मंत्र से करना इस विधि का अभाव होने से ॥ ३७ ॥

और हेतु कहते हैं । अविज्ञेयादिति । वेद वाक्यों का अर्थ अविज्ञेय=जानने योग्य न होने से उसका अर्थ नहीं । "सृण्येव" ऋ. ८।३।६।६ इत्यादि मंत्रों को अविज्ञेयार्थक पदसे विशिष्ट होने से मंत्र केवल उच्चारणार्थ हैं यह भाव है ॥ ३८ ॥

अनित्यसंयोगान्मन्त्रानर्थक्यम् ॥ ३९ ॥

अन्यमाह । अनित्येति । "किं ते कृण्वन्ति कीकटेषु-गाव" इत्यत्र कीकटदेशादिरूपानित्यवस्तुवचनपदघटितत्वात् । अर्थविवक्षायामनित्यत्वं वेदस्य स्यादतोमन्त्रानर्थक्यं दृष्टस्यार्थे स्मरणस्य कारणं न किंतु तदुच्चारणमदृष्टार्थमिति भावः ॥३९

अविशिष्टस्तु वाक्यार्थः ॥ ४० ॥

सिद्धान्तमारभते । अवीति । लोके यानि पादानि ये च तेषामर्थाः तेभ्यः अविशिष्टः अविलक्षणः वेदे पदप्रहितो ऽर्थः

---

अन्य हेतु को कहते हैं । अनित्येति कीकट देश में गौयें तुम्हारा क्या नष्ट किया है इत्यादि मंत्रों में कीकट देश और नैशाख नगर और उसका प्रमंगद राजादि रूप अनित्य वस्तु का वाचक पद से संपादित होने से यदि प्रमंगद राजा आदि रूप अर्थ बोध कराना मंत्र का उद्देश्य होतो वेद को अनित्यत्व आता है इसलिए मंत्र की अनर्थकता है । मंत्र का उच्चारण दृष्ट अर्थ के स्मरण का कारण नहीं किंतु अदृष्टार्थ है यह भाव है ॥३९॥

पूर्व पक्ष का मत निबद्ध करके अब उस विषय में सिद्धान्त का आरम्भ करते हैं । "अवि इत्यादि सूत्र से । लोक में जो पद हैं और उन्हों के जो अर्थ हैं उन्हों से ( अविशिष्टः ) अविलक्षण अर्थात् समान ही वेद में भी पद प्रतिपादित अर्थहै । क्रियाकारक

यथा लोके उच्चारितशब्दार्थो विवक्षितः तथा वेदेऽपीति भावः ॥ ४० ॥

गुणार्थेन पुनः श्रुतिः ॥ ४१ ॥

चतुर्भिरभ्रिमादत्त इत्यस्य फलमाह । गुणेति । गुणार्थेन चतुष्ठ्यरूपगुणलाभार्थं पुनः श्रुतिः पुनर्विधानम् । आदाने लिंगेनैकैक मंत्रस्य विकल्पेन प्राप्तौ चतुर्णां समुच्चयार्थं पुनर्विधिरिति भावः ॥ ४१ ॥

संबंध में प्रतीयमान वाक्यार्थ लोक में और वेद में उभयत्र एक रूप है । जैसे लोक में उच्चारित शब्दार्थ विवक्षित है वैसा ही वेद में भी यह भाव है ॥ ४० ॥

खनन का हेतु काष्ठ विशेष का नाम अभ्रि है उसका चार मंत्रों द्वारा ग्रहण करना चाहिए, इस विधि वाक्य के फल को कहते हैं । गुणेति । मंत्र के द्वारा प्रतीत विषय का ही ब्राह्मण वाक्य में जो पुनः श्रवण=पुनः विधान है वह केवल चतुष्ठ्य संख्या रूप गुणविधान के निमित्त ही उपयुक्त हुआ है । अभ्रि के आदानमें लिङ्गसे एक एक मंत्रकी विकल्पसे प्राप्ति होने पर चारों के समुच्चय के लिए पुनः विधान है यह भाव है । अर्थात इस विधि के न होने पर चार मंत्रों में से किसी के द्वारा अभ्रि आदान करना ही विधान होता और जब यह विधि है तब चारों के द्वारा आदान करना होता है ॥ ४१ ॥

परिसंख्या ॥ ४२ ॥

अश्वाभिदानीमादत्तइत्यस्य फलमाह। परीति। परिसंख्याया गर्दभरसनातो निवृत्तिः फलम्। लिङ्गस्योभयसाधारणत्वादिति भावः ॥ ४२ ॥

अर्थवादो वा ४३ ॥

उरु प्रथस्वेति ब्राह्मणवाक्यम् लिंगेन कल्पितविधिशेषोऽर्थवाद इत्याह। अर्थेति। लिंगादेव सिद्धेः उरुप्रथस्वेति पुरोडाशं प्रथयति इति पुनः श्रवणमर्थवाद एव ॥ ४३ ॥

अविरुद्धं परं ॥ ४४ ॥

---

"अश्वाभि" इस वाक्य का फल कहते हैं। परि इत्यादि सूत्र से "अश्वाभिधानीमादत्त" इत्यस्य परिसंख्याविधिः कर्त्तव्य उक्त वाक्य को परिसंख्या विधि करनी चाहिए। परिसंख्या का फल गर्दभ रसना से मंत्र की निवृत्ति है। लिङ्ग को दोनों में साधारण होने से यह भाव है ॥ ४२ ॥

"उरुप्रथस्वेति" यह ब्राह्मणवाक्य लिंग द्वारा कल्पित विधि का शेष है=अर्थवाद है ऐसा कहते हैं। अर्थेति लिंग से सिद्ध होने पर "उरुपथस्वेति पुरोडाशं प्रथयति" यह पुनः श्रवण अर्थवाद ही है ॥ ४३ ॥

वाक्य नियमादित्यस्योत्तरमाह । अविरुद्धमिति । परं नियतक्रमकं पठनमविरुद्धमर्थस्मरणपक्षेऽप्यविरुद्धं क्रमपाठ-नियमापूर्व कल्पनादिति शेषः ॥ ४४ ॥

संप्रैषे कर्मगर्हाऽनुपलम्भः संस्कारत्वात् ॥ ४५ ॥

बुद्धशास्त्रादित्यस्योत्तरमाह । संप्रैषइति । संप्रैषऽग्नींदग्नींनिति वाक्ये कर्मणि कर्मबोधे गर्हा दूषणं तदनुपालम्भः अदूषणं । संस्कारत्वात् मंत्रेण पुनः स्मरणेन अग्निध्रस्य संस्कारो भवति । व्रीहीणामिव पोक्षणेनेति भावः ॥ ४५ ॥

अभिधानेऽर्थवादः ॥ ४६ ॥

---

वाक्यनियमात इसका उत्तर कहते हैं । अविरुद्धमिति । (परं) जो नियत क्रमवाला मंत्र पाठ अदृष्टार्थ कहा है वह (अविरुद्धं) अर्थस्मरण पक्ष में भी विरुद्ध नहीं क्योंकि क्रमपाठ का नियम करने से नियमापूर्वक अनुमान होता है यह शेष है ॥ ४४ ॥

"बुद्धशास्त्रात" इसका उत्तर देते हैं । संप्रैषइति । (संप्रैषे) "अग्नीदग्नीन् विहर" तै० सं० ६।३।१।२ इस अनुज्ञावाक्य में (कर्मणि) ज्ञात कर्मके ज्ञानमें जो (गर्हा) दोष दिया गयाथा वह (अनुपालम्भः) दोष नहीं क्योंकि (संस्कारत्वात्) मंत्र द्वारा पुनः स्मरण करने से आग्नीध्र का अदृष्टरूप संस्कार होता है । प्रोक्षण से व्रीहिओं की भांति यह भाव है ॥ ४५ ॥

अविद्यमानवचनादित्यस्योत्तरमाह । अभिधानेति । अभिधाने चत्वारीति मंत्रे चत्वारि शृङ्गा इत्यादीनि पदानि अर्थवादः गौण्या वृत्त्या स्तावकानि । अयमृग्वेदे विषुवसंज्ञक-एकाहे आग्नेय्याहोता शंसतीति विहित आज्यशस्त्रे अग्निस्सूर्या दभिन्न इति स्तुत्यर्थं प्रवृत्तः । अस्य सूर्यस्य चत्वारि शृङ्गा दिवससम्बन्धिनः यामाः त्रयः शीतोष्णवर्षाः पादाः द्वे अयने शीर्षे सप्त अश्वाः हस्तासः त्रिधा त्रिप्रकारेण सवनत्रय-रूपेणबद्धः वृष्टिहेतुत्वाद्वृषभः महोदेवः मर्त्यानुत्साहयन् आवि-वेशेति सूर्याभिन्नोऽग्निरित्यर्थः एतेनाचेतने स्वधित्यादौ

"अविद्यमानवचनात्" इसके उत्तर को कहते हैं । अभिधान इति । अभीयते अनेन इस व्युत्पत्ति से अभिधान नाम मंत्र का है (अभिधाने) "चत्वारि" इस मंत्र में चत्वारि शृंगा इत्यादि पद (अर्थवाद) गौणीवृत्तिं से स्तुतिवाद हैं यह ऋग्वेद में विषुवनामक एकाहयाग है उसमें "आग्नेय्याहोता शंसति" इस वाक्य से विहित आज्य शस्त्र है उस स्थल में अग्नि सूर्य से अभिन्न है । इस स्तुति के लिए प्रवृत्त है । इस सूर्य के दिन-संबंधी चार याम हैं वे विषाण हैं. तीन शीतोष्ण और वर्षा ये पाद हैं, दो अयन-उत्तरायण तथा दक्षिणायण ये सिरहैं, सात घोड़े हाथ हैं, तीन प्रकार से=सवनत्रय रूप से बद्ध हैं । वृष्टि की कारणता होने से वृषभ है महोदेव मनुष्यों को उत्साह करता हुआ प्रवेश किया इस प्रकार सूर्य से अभिन्न अग्नि है यह अर्थ है । इससे अचेतन "स्वधिति"

चैतन्यारोपेण तत्स्तुतिरिति अचेतनेति सूत्रमपि प्रत्युक्तम् ॥४६

गुणादविप्रतिषेधः स्यात् ॥ ४७ ॥

अर्थविप्रतिषेधादित्यस्योत्तरमाह । गुणादिति । गुणात् गुणकथनात् अविप्रतिषेधः अविरोधः । अदितिद्यौरित्यत्र त्वं माता त्वं पितेतिवदविद्यमानगुणैरेव स्तुतिरिति भावः ॥४७

विद्यावचनमसंयोगात् ॥ ४८ ॥

---

इत्यादियों में चैतन्य के आरोपण से उसकी स्तुति है इस प्रकार "अचेतन" यह सूत्र भी प्रत्युक्त हो गया ॥ ४६ ॥

अब "अर्थविप्रतिषेधात्" इस सूत्र में किये गये पूर्वपक्ष का समाधान करते हैं । गुणादिति । (गुणात्) "अदितिर्द्यौ" इस मंत्र में गुणवृत्ति से अदिति को द्यू और अंतरिक्ष आदि प्रतिपादन किया है इसलिए (अविप्रतिषेधः स्यात्) अर्थों का परस्पर कोई विरोध नहीं । एक ही शब्द गुणवृत्ति से नाना अर्थों का कथन कर सकता है जैसा कि लोक में सिंह शब्द मुख्यवृत्ति से सिंह को गुणवृत्ति से माणवक को कहता है और उन अर्थों का परस्पर कोई विरोध नहीं वैसे ही वेद में भी जानना चाहिये यह तात्पर्य है । अदितिर्द्यौ ऋ० १.६।१७।१० इस वाक्य में तुम्हीं माता तुम्हीं पिता इस वाक्य के समान अविद्यमान गुणों द्वारा स्तुति की गई है यह भाव है ॥ ४७ ॥

स्वाध्यायेति हेतुं निवारयति । विद्येति । विद्याया अर्थज्ञानस्यावचनमविधानम् । असंयोगादर्थसिद्धत्वात् स्वाध्यायविधिभाव्यमर्थज्ञानमिति सिद्धत्वादिति भावः ॥ ४८ ॥

सतः परमविज्ञानम् ॥ ४९ ॥

सृण्येव जर्भरीत्यादिमंत्रे ( सतः ) अर्थस्य सतः अविज्ञानं ज्ञानाभावः परमालस्यादिति पूरणीयम् । तस्या ऋचोऽर्थः कौस्तुभेस्पष्टः ॥ ४९ ॥

उक्तश्चानित्यसंयोगः ॥ ५० ॥

अनित्यसंयोगपरिहारस्तूक्तः प्रथमपादे "परं तु श्रुतिसामान्य

---

स्वाध्याय इस हेतु का निवारण करते हैं । विद्येति । ( विद्याया ) अर्थज्ञान का ( अवचनं ) विधान नहीं (असंयोगात्) " अर्थस्मरणं मंत्रेण कर्त्तव्यं " इस वचन के बिना ही अर्थ सिद्ध होनेसे " स्वाध्याय विधि का भाव्य=साध्य अर्थज्ञान है इसलिए "स्वाध्यायः" इस विधिसे ही अर्थज्ञान सिद्धहै यह भावहै ॥४८॥

" सृण्येव " इत्यादि मंत्र में ( सतः ) विद्यमान अर्थ का ( अविज्ञानं ) ज्ञान न होना ( परं ) युक्त है । " आलस्य से " इस पद का सूत्र में पूर्ण करना चाहिए । इस ऋचा का अर्थ कौस्तुभ में स्पष्ट है ॥ ४९ ॥

मात्रम् ॥ इत्यात्रेत्याह । उक्त इति । अनित्यसंयोगः तद्वारणोपायः ॥ ५० ॥

लिङ्गोपदेशश्च तदर्थत्वात् ॥ ५१ ॥

एवं परोक्तदोषानुद्धृत्यार्थविवक्षायां साधकमाह । लिङ्गेति "आग्नेय्याऽऽग्नीध्रमुपतिष्ठते" इत्यत्र विधौ आग्नेय्येति मंत्रेऽग्निलिंगोपदेशः अर्थज्ञानमन्तरा न संभवति । तदर्थत्वाद् अग्निर्देवता प्रतिपाद्या अस्यामृचीत्याग्नेयीति तद्धितार्थत्वात् ।

---

जन्म-मरण वाले अर्थ के निरूपण का समाधान तो प्रथम पाद के "परंतु" इत्यादि सूत्र में किया गया है इसी बात को कहते हैं । उक्त इति । अनित्य अर्थों का प्रतिपादन और उसके समाधानका उपाय कहा गयाहै । वेद मंत्रोंमें जो मनुष्य वा ग्रामों के नाम आते हैं वे सामान्य नाम हैं किसी व्यक्ति विशेष वा ग्राम विशेष के नहीं । यही सर्वत्र जानना चाहिए ॥ ५० ॥

इस प्रकार पूर्वपक्षी द्वारा कथन किये गए सब पूर्वपक्षों का समाधान करके अब मंत्रोंका अर्थ होता है । इस पक्षकी दृढ़ता के लिए युक्ति कहते हैं । "लिंगेति" आग्नेय्या अग्नि प्रकाशिकया ऋचा अग्नीध्रंतन्नामकं मंडप विशेषं महावेदेरुत्तरभागेस्थितं, उपतिष्ठते अभिदध्यादित्यर्थः । अग्नि बोधक ऋचा द्वारा महावेदि के उत्तर भाग में स्थित आग्नीध्र नामक मंडप विशेष की स्तुति करे यह अर्थ है । "आग्नेया" इस मंत्र में अग्निरूपार्थ का बोधन

अस्यामृच्यग्निर्देवता प्रतिपाद्येत्यर्थज्ञानमन्तराऽसंभवादिति भावः ॥ ५१ ॥

ऊह ॥ ५२ ॥

मंत्राणाम् विवक्षितार्थकत्वे साधकान्तरमाह । ऊह इति। ऊहः ऊहनिषेधश्च मंत्राणाम् विवक्षितार्थत्व उपपन्न इति शेषः। अयं भावः । बहु पशुक यागे अर्थबाधेन एनमित्यत्र एनानिति बहुवचनोहवन् "माता मन्यन्तामनुपिता" यजुर्वेद ४।२०ः तै० सं० १।२।४ इत्यत्र मातरोमन्यतामनुपितर इत्यूहप्राप्तौ

---

सामर्थ्यरूपलिंग का उपदेश इस विधिवाक्य मे है. वह र्थज्ञान के बिना नहीं हो सकता । (तदर्थत्वात्) अग्निदेवता प्रतिपाद्य इस ऋचा में ऐसा आग्नेयी इस तद्धितान्त का अर्थ होने से । इस ऋचा में अग्निदेवता प्रतिपाद्य है यह अर्थ अर्थज्ञान के बिना अयुक्त होने से मंत्र वाक्य का अर्थ है यह भाव है ॥ ५१ ॥

मंत्रों की अर्थविपक्षा है इस विषय में सूत्र में अन्य एक हेतु दिखाते हैं । ऊह इस सूत्रसे । ऊह तथा ऊहका निषेध मंत्रों के अर्थ विवक्षा होने पर युक्त हो सकता है अन्यथा नहीं यह शेष है । भाव यह है कि बहुपशुक यागमें एकत्व रूप अर्थका बाध होने से 'एनम्' इसके स्थान में 'एनान्' इस बहुवचन के प्रक्षेपरूप ऊह की भांति "मातामन्यताम्" इस वाक्य में मातरः पितरः इस बहुवचनान्त ऊह की प्राप्ति होने पर 'माता

न माता वर्धते नो पितेति माता बहुवचनाद्यूहेन न वर्धयितव्य इति निषेधः अर्थज्ञानार्थत्व उपपद्यते । केवलमदृष्टार्थत्व ऊहस्या ऽप्रसक्त्या निषेधो विरुध्यतइति । प्रकृतावाम्नात मंत्रगत पदस्य विकृतावर्थान्तराभिधानाय तदुचितपदान्तरप्रक्षेप ऊहः ॥५२॥

## विधिशब्दाश्च ॥ ५३ ॥

अस्मिन्विषये साधकान्तरमाह । विधीति । विधिश्च क्वचिदर्थवादश्च मंत्रस्यार्थवत्त्वसाधकः यथाऽग्निहोत्रप्रकरणे महोपस्थाने अग्ने गृहपते सुगृहपतिरहम् त्त्वयेति मंत्रेशतँ हिमा इत्यस्ति । तत्र हिमा इत्यस्य व्याख्यानं शतँ हिमाः इत्याह

---

वृद्धि नहीं पाती, पिता वृद्धि नहीं पाता ' इस वाक्य से मातृ तथा पितृ शब्द की बहुवचनादि का ऊह करके वृद्धि नहीं करनी चाहिये यह निषेध किया गया है वह मंत्रों को अर्थ ज्ञानार्थत्व होने पर संगत होता है । केवल अदृष्टार्थत्व होने पर ऊहकी प्राप्ति न होनेसे निषेध विरुद्ध हो जायगा । प्रकृतियाग में पठित मंत्र गत पद के स्थान में विकृतियाग में अर्थान्तर कथन के लिए उसका उपयोगीपदान्तर का प्रक्षेप=सन्निविष्ट करके पाठ करने का नाम ऊह है ॥ ९२ ॥

इस विषय में अन्य हेतु को कहते हैं । विधि इत्यादि सूत्र से । ( विधिश्च ) कहीं अर्थवाद वाक्य भी मंत्र के अर्थ का साधक होता है । जैसे अग्नि होत्र प्रकरण में महोपस्थान में—

